Shri Kalabhairavashtakam



# श्रीकालभैरवाष्टकम्

## Sanskrit Document Information

Text title : kAlabhairavAShTakam

File name : kAlabhairavAShTakam.itx

Category : shiva, sachchidAnanda-shivAbhinava-nRisiMhabhAratI, aShTaka

Location : doc_shiva

Author : Sachchidananda Shivabhinava Nrisimha Bharati Swamigal

Proofread by : PSA Easwaran psawaswaran at gmail.com

Latest update : November 9, 2018

Send corrections to : Sanskrit@cheerful.com



November 10, 2018

*sanskritdocuments.org*

# श्रीकालभैरवाष्टकम्



अङ्गसुन्दरत्वनिन्दिताङ्गजातवैभवं
भृङ्गसर्वगर्वहारिदेहकान्तिशोभितम् ।
मङ्गलौघदानदक्षपादपद्मसंस्मृतिं
श्रृङ्गशैलवासिनं नमामि कालभैरवम् ॥ १॥

पादनम्रमूकलोकवाक्प्रदानदीक्षितं
वेदवेद्यमीशमोदवार्धिशुभ्रदीधितिम् ।
आदरेण देवताभिरर्चिताङ्घ्रिपङ्कजं
श्रृङ्गशैलवासिनं नमामि कालभैरवम् ॥ २॥

अम्बुजाक्षमिन्दुवक्त्रमिन्दिरेशनायकं
कम्बुकण्ठमिष्टदानधूतकल्पपादपम् ।
अम्बरादिभूतरूपमम्बरायिताम्बरं
श्रृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ३॥

मन्दभाग्यमप्यरं सुरेन्द्रतुल्यवैभवं
सुन्दरं च कामतोऽपि संविधाय सन्ततम् ।
पालयन्तमात्मजातमादरात्पिता यथा
श्रृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ४॥

नम्रकष्टनाशदक्षमष्टसिद्धिदायकं
कम्रहासशोभितुण्डमच्छगण्डदर्पणम् ।
कुन्दपुष्पमानचोरदन्तकान्तिभासुरं
श्रृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ५॥

काशिकादिदिव्यदेशवासलोलमानसं
पाशिवायुकिन्नरेशमुख्यदिग्धवार्चितम् ।
नाशिताघवृन्दमङ्घ्रिनम्रलोकयोगदं
श्रृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ६॥

सारमागमस्य तुङ्गसारमेयवाहनं
दारितान्तरान्ध्यमाशु नैजमन्त्रजापिनाम् ।
पूरिताखिलेष्टमष्टमूर्तिदेहसम्भवं
शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ७॥

कालभीतिवारणं कपालपाणिशोभितं
खण्डितामरारिमिन्दुबालशोभिमस्तकम् ।
चण्डबुद्धिदानदक्षमक्षतात्मशासनं
शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ८॥

इति शृङ्गेरि श्रीजगद्गुरु श्रीसच्चिदानन्दशिवाभिनवनृसिंह-
भारतीस्वामिभिः विरचितं श्रीकालभैरवाष्टकं सम्पूर्णम् ।

Proofread by PSA Easwaran psaeaswaran at gmail.com



